# पुनरावर्तनम्

- अवभृथेऽवसिते – यागानन्तरं नगरं प्रतिनिवृत्तः दशरथः
- अपाटवात् – राजपत्नीषु गर्भचिह्नानि दृष्टानि
- मन्दमन्दमपयद् – गर्भोदये कौसल्यायाः वर्णनम्
- न्यग्रोधपत्रसमताम् – गर्भोदयात् पूर्वं परञ्च कौसल्यायाः उदरस्य वटपत्रतुल्यत्वम्

मध्यं तनुत्वादविभाव्यमानम्
आकाशमासीदसितायताक्ष्याः ।
गर्भोदये विष्णुपदापदेशात्
कार्श्यं विहायापि विहाय एव ॥२८॥

- मध्यम्, तनुत्वात्, अविभाव्यमानम्, आकाशम्, आसीत्, असित-आयत-अक्ष्याः, गर्भ-उदये, विष्णु-पद-अपदेशात्, कार्श्यम्, विहाय, अपि, विहायः, एव ।

मध्यं तनुत्वादविभाव्यमानम् आकाशमासीदसितायताक्ष्याः ।
गर्भोदये विष्णुपदापदेशात् कार्श्यं विहायापि विहाय एव ॥२८॥

- आसीत् = बभूव
- किम् आसीत्? मध्यम् = कटिप्रदेशः
- कस्याः मध्यम्? असितायताक्ष्याः = कृष्णविशालनेत्रायाः कौसल्यायाः
- कीदृशम् आसीत्? अविभाव्यमानम् = अदृश्यमानम्
- आकाशम् = नभस्तुल्यम्
- केन हेतुना अविभाव्यमानम्? तनुत्वात् = कार्श्यात्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# मध्यं तनुत्वादविभाव्यमानम् आकाशमासीदसितायताक्ष्याः ।
# गर्भोदये विष्णुपदापदेशात् कार्श्यं विहायापि विहाय एव ॥२८॥

- गर्भोदये = गर्भोत्पत्तौ सत्याम्
- विष्णुपदापदेशात् = गर्भरूपेण वसतः नारायणस्य निवासस्थानत्वात् "विष्णुपदम्" इति व्यवह्रियमाणत्वात्
- कार्श्यं = तनुत्वम्
- विहाय = त्यक्त्वा
- अपि

मध्यं तनुत्वादविभाव्यमानम् आकाशमासीदसितायताक्ष्याः ।
गर्भोदये विष्णुपदापदेशात् काश्यं विहायापि विहाय एव ॥२८॥

- विहायः = आकाशः
- एव
- पूर्वं काश्यकारणेन अदृश्यत्वात् आकाशत्वमासीत् । अधुना विष्णुपदत्वात् काश्यं त्यक्त्वापि आकाशत्वम् । ["वियद् विष्णुपदं वा तु पुंस्याकाशविहायसी" इत्यमरः]

मध्यं तनुत्वादविभाव्यमानम् आकाशमासीदसितायताक्ष्याः ।
गर्भोदये विष्णुपदापदेशात् कार्श्यं विहायापि विहाय एव ॥२८॥

- अन्वयः – असितायताक्ष्याः मध्यं तनुत्वाद् अविभाव्यमानम् आकाशम् आसीत् । गर्भोदये [सति] विष्णुपदापदेशात् कार्श्यं विहाय अपि विहायः एव
- तात्पर्य्यम् – कौसल्यायाः कटिभागः पूर्वम् अत्यन्तं कृशः, तेन हेतुना अदृश्यप्रायः आकाशकल्पः आसीत् । गर्भोत्पत्तौ सत्यां तु कार्श्ये विगते अपि, नारायणस्य निवासस्थानत्वात् "विष्णुपदम्" इति विख्यातम्, नामसाम्येन आकाशतुल्यमेव आसीत् ।

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education

# मध्यं तनुत्वादविभाव्यमानम् आकाशमासीदसितायताक्ष्याः ।
# गर्भोदये विष्णुपदापदेशात् कार्श्यं विहायापि विहाय एव ॥२८॥

- असितायताक्ष्याः – असिते च आयते च, असितायते अक्षिणी यस्याः सा । ईकारान्तः, स्त्री, ६.१
- विष्णुपदापदेशात् – विष्णोः पदम्, विष्णुपदस्य अपदेशः, तस्मात्
- कार्श्यम् – कृशस्य भावः – कृश + ष्यञ् (तद्धितः)
- विहाय – वि+ "ओहाक् त्यागे" – ल्यबन्ताव्ययम्

मध्यं तनुत्वादविभाव्यमानम् आकाशमासीदसितायताक्ष्याः ।
गर्भोदये विष्णुपदापदेशात् कार्श्यं विहायापि विहाय एव ॥२८॥

- विहायः – सकारान्तः, नपुं, १.१ । “वियद् विष्णुपदं वा तु पुंस्याकाश-विहायसी” “विहायाः शकुने पुंसि गगने पुंनपुंसकम्” ।
- पूर्वार्धे अतिशयोक्तिः, उत्तरार्धे विरोधाभासः । विष्णुपदशब्दे श्लेषः ।
- “कार्श्यं विहायापि विहाय एव” इत्यत्र यमकम् ।
- इन्द्रवज्रा वृत्तम् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- रामजननम् ।

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- उच्चस्थे, ग्रह-पञ्चके, सुर-गुरौ, स-इन्दौ, नवम्याम्, तिथौ, लग्ने, कर्कटके, पुनर्वसु-युते, मेषम्, गते, पूषणि, निर्दग्धुम्, निखिलाः, पलाश-समिधः, मेध्याद्, अयोध्या-अरणेः, आविर्भूतम्, अ-भूत-पूर्वम्, अपरम्, यत्किञ्चित्, एकम्, महः

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- आविर्भूतम् = स्वयमेव अभिव्यक्तम् अभूत्
- किम् आविर्भूतम्? महः = ज्योतिः
- कीदृशं महः? अभूतपूर्वम्, अपरम्, एकम्, यत्किञ्चित्

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥२९॥

- अभूतपूर्वम् = पुरा कदाप्यविद्यमानम्, सजातीय-भेद-रहितम्
- अपरम् = अद्वितीयम्, विजातीय-भेद-रहितम्
- एकम् = स्वगत-भेद-रहितम्
- यत्किञ्चित् = त्रिविधभेदरहिततया अनिर्वाच्यम्

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- कुतः आविर्भूतम्? अयोध्यारणेः - अयोध्या एव अरणिः = अग्निमन्थनदारुविशेषः, तस्मात्
- कीदृशाद् अयोध्यारणेः? मेध्यात् = पवित्रात्
- किमर्थम् आविर्भूतम्? निर्दग्धुम् = भस्मीकर्तुम्

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- कान् निर्दग्धुम्? निखिलाः = समस्तानि, पलाशसमिधः = राक्षसरूपाणि एधांसि
- कदा आविर्भूतम्? ग्रहपञ्चके उच्चस्थे = सूर्य-कुज-गुरु-शुक्र-शनिरूपेषु पञ्चसु ग्रहेषु स्व-तुङ्गस्थान-सङ्गतेषु

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- सुरगुरौ सेन्दौ = बृहस्पतौ चन्द्रेण युक्ते सति
- नवम्यां तिथौ
- कर्कटके लग्ने
- पुनर्वसुयुते = पुनर्वसूनक्षत्रयुक्ते
- पूषणि मेषं गते = सूर्ये मेषराशिं प्रविष्टे सति

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- अन्वयः – ग्रहपञ्चके उच्चस्थे, सुरगुरौ सेन्दौ, नवम्यां, कर्कटके लग्ने, पुनर्वसुयुते तिथौ, पूषणि मेषं गते, निखिलाः पलाशसमिधः निर्दग्धुं मेध्याद् अयोध्यारणेः अभूतपूर्वम्, अपरम्, एकं यत्किञ्चित् महः आविर्भूतम्

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- तात्पर्य्यम् – सूर्यादिषु पञ्चसु ग्रहेषु स्वतुङ्गस्थानेषु सत्सु, बृहस्पतौ चन्द्रेण युक्ते, नवम्यां, कर्कटकलग्ने, पुनर्वसुनक्षत्रयुक्ते दिने, सूर्ये मेषराशिं प्रविष्टे सति, सर्वाणि राक्षसरूपाणि एधांसि भस्मीकर्तुं पवित्रात् अयोध्यारूपाद् अरणेः पूर्वमदृष्टम्, अद्वितीयम्, एकम् अनिर्वचनीयं ज्योतिः स्वयम् अभिव्यक्तम् अभूत्

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- ततो यज्ञे समाप्ते तु ऋतूनां षट् समत्ययुः । ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ॥
  नक्षत्रेऽदितिदैवत्ये स्वोच्चसंस्थेषु पंञ्चसु । ग्रहेषु कर्कटे लग्ने वाक्पताविन्दुना सह ॥
  प्रोद्यमाने जगन्नाथं सर्वलोकनमस्कृतम् । कौसल्याऽजनयद्रामं सर्वलक्षणसंयुतम् ॥

बाल १८.८-१०

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- उच्चस्थे – उच्चे तिष्ठति, तस्मिन् – उपपदस्मासः
- सुरगुरौ – सुराणां गुरुः, तस्मिन् । "बृहस्पतिः सुराचार्यः" (अमरः)
- सेन्दौ – इन्दुना सह विद्यते इति, तस्मिन् । उकारान्तः, पुं, ७.१ ।
  "हिमांशुश्चन्द्रमाश्चन्द्रः इन्दुः कुमुदबान्धवः" (अमरः)

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- पूषणि – नकारान्तः, पुं, ७.१ । विकर्तन-अर्क-मार्तण्ड-मिहिर–अरुण-पूषणः” (अमरः)
- निर्दग्धुम् – निर् + “दह भस्मीकरणे” – तुमुन्नन्ताव्ययम्
- पलाशसमिधः – पलाशाः एव समिधः । धकारान्तः, स्त्री, २.३ । पलम् = मांसम् अश्नन्ति इति पलाशाः = राक्षसाः ।

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- मेध्यात् – "पूतं पवित्रं मेध्यं च" (अमरः)
- अयोध्यारणेः – अयोध्या एव अरणिः, तस्मात् । इकारान्तः, पुं, ५.१
- आविर्भूतम् – आविस् + भू + क्त
- अभूतपूर्वम् – पूर्वं भूतम्, न भूतपूर्वम् ।

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणेः
आविर्भूतमभूतपूर्वमपरं यत्किञ्चिदेकं महः ॥।२९॥

- अपरम् – न विद्यते परं यस्मात् तत्
- महः – "महस्तूत्सवतेजसोः" (अमरः)
- रूपकालङ्कारः
- शार्दूलविक्रीडितं वृत्तम् – "सूर्याश्वैर्मसजाः स्तताः सगुरवः शार्दूलविक्रीडितम्" । प्रतिपादं १९ अक्षराणि । म-स-ज-स-त-त-गुरुः। द्वादशाक्षरानन्तरं यतिः।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education

# अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
# अलञ्चकार कारुण्याद् रघूणामन्वयं हरिः ॥३०॥

- अथ, राम-अभिधानेन, कवेः, सुरभयन्, गिरः, अलञ्चकार, कारुण्याद्, रघूणाम्, अन्वयम्, हरिः ।
- अथ = तदनन्तरम्, रामजननानन्तरम्
- अलञ्चकार = भूषयामास
- कः अलञ्चकार? हरिः = विष्णुः (भक्तजनदुरितानि हरति इति हरिः)

Vyoma
॥वाचं धेनुमुपासीत॥
Samskritam - Value Education

# अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
# अलञ्चकार कारुण्याद् रघूणामन्वयं हरिः ॥३०॥

- किम् अलञ्चकार? अन्वयम् = वंशम्
- केषाम् अन्वयम्? रघूणाम् = रघोः अपत्यानाम्
- केन हेतुना अलञ्चकार? कारुण्याद् = करुणया
- कथम्भूतः अलञ्चकार? सुरभयन् = सुगन्धीनि/मनोज्ञानि कुर्वन्
- किम् सुरभयन्? गिरः = वाचः

अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
अलङ्कार कारुण्याद् रघूणामन्वयं हरिः ॥३०॥

- कस्य वाचः सुरभयन्? कवेः = आदिकवेः वाल्मीकेः
- केन सुरभयन्? रामाभिधानेन = "राम" इति नाम्ना
- अन्वयः – अथ रामाभिधाने कवेः गिरः सुरभयन् हरिः कारुण्यात् रघूणाम् अन्वयम् अलङ्कार
- तात्पर्य्यम् – परमकारुणिकः हरिः श्रीरामरूपेण रघुवंशे अवतीर्य वाल्मीकेः वचनानि स्वनाम्ना भूषयामास

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education

# अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
# अलञ्चकार कारुण्याद् रघूणामन्वयं हरिः ॥३०॥

- रामाभिधानेन – रामः इति अभिधानम्, तेन । “रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः”, “सहस्रनाम तत्तुल्यं रामनाम वरानने” ।
- रमन्ते योगिनः अस्मिन् इति रामः – “रम क्रीडायाम्” + अधिकरणे घञ् (कृत्) ।
- “रमन्ते योगिनोऽनन्ते सदानन्दे चिदात्मनि ।

  इति रामपदेनासौ परब्रह्माभिधीयते ॥”

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - ...

# अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
# अलञ्चकार कारुण्याद् रघूणामन्वयं हरिः ॥३०॥

- सुरभयन् – सुरभिं कुर्वन् – सुरभि+णिच् (नामधातुः) + शतृ – तकारान्तः, पुं, १.१
- गिरः – रेफान्तः, स्त्री, २.३ ।
- अलञ्चकार – अलम्+कृ – लिट्, १.१
- कारुण्यात् – "कारुण्यं करुणा घृणा" (अमरः) । करुणा एव कारुण्यम् । करुणा + स्वार्थे ष्यञ् (तद्धितः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam-Value Education

# अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
# अलङ्कार कारुण्याद् रघूणामन्वयं हरिः ॥३०॥

- अन्वयम् – "सन्ततिः गोत्र-जनन-कुलानि अभिजन-अन्वयौ" (अमरः)
- हरिः – हरति इति हरिः । हृ + इन् (उणादिप्रत्ययः) ।
- यम-अनिल-इन्द्र-चन्द्र-अर्क-विष्णु-सिंह-अंशु-वाजिषु। शुक-अहि-कपि-भेकेषु हरिर्ना कपिले त्रिषु ॥ (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# सङ्क्षेपः

- मध्यं तनुत्वात् – "विष्णुपद"त्वात् मध्यभागस्य कार्श्याभावेऽपि आकाशत्वम्
- उच्चस्थे ग्रहपञ्चके – रामजननम्
- अथ रामाभिधानेन – रामनाम्ना रघुवंशं, वाल्मीकिवचनानि च भूषयामास हरिः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in